महर्षि वसिष्ठ विरचिता

# धनुर्वेदसंहिता

अथैकदा विजिगीषुर्विश्वामित्रो राजर्षिर्गुरुवसिष्ठमभ्युपेत्य प्रणम्योवाच । ब्रूहि भगवन् धनुर्विद्यां श्रोत्रियाय दृढचेतसे शिष्याय दुष्टशत्रुविनाशाय च । तमुवाच महर्षिब्रह्मर्षिप्रवरो वसिष्ठः शृणु भो राजन् विश्वामित्र यां सरहस्य-धनुर्विद्यां भगवान् सदाशिवः परशुरामायोवाच तामेव सरहस्यां वच्मि ते हिताय गोब्राह्मणसाधुवेदसंरक्षणाय च यजुर्वेदाथर्व सम्मितां संहिताम्

अथोवाच महादेवो भार्गवाय च धीमते
तत्तेऽहं संप्रवक्ष्यामि यथातथ्येन संशृणु १

तत्र चतुष्टयपादात्मको धनुर्वेदः । यस्य प्रथमे पादे दीक्षाप्रकारः ।
द्वितीये संग्रहः तृतीये सिद्धप्रयोगाः चतुर्थे प्रयोगविधयः २

अथ कस्य धनुर्वेदाधिकार इत्यपेक्षायामाह
धनुर्वेदे गुरुर्विप्रः प्रोक्तो वर्णद्वयस्य च
युद्धाधिकारः शूद्रस्य स्वयं व्यापादि शिक्षया ३

चतुर्विधमायुधम् । मुक्तममुक्तंमुक्तामुक्तं-
यन्त्रमुक्तञ्चेति ४

दुष्टदस्युचोरादिभ्य साधुसंरक्षणं धर्म्मतः
प्रजापालनं धनुर्वेदस्य प्रयोजनम् ५

एकापि यत्र नगरे प्रसिद्धः स्याद्धनुर्द्धरः
ततो यान्त्यरयो दूरान्मृगाः सिंहगृहादिव ६

आचार्य्येण धनुर्देयं ब्राह्मणे सुपरीक्षिते
लुब्धे धूर्त्ते कृतघ्ने च मन्दबुद्धौ न दापयेत् ७

ब्राह्मणाय धनुर्द्देयं खड्गं वै क्षत्रियाय च
वैश्याय दापयेत् कुन्तं गदां शूद्राय दापयेत् ८

धनुश्चक्रञ्च कुन्तञ्च खड्गञ्च क्षुरिका गदा
सप्तमं बाहुयुद्धं स्यादेवं युद्धानि सप्तधा ९

अथाचार्य्यलक्षणम्

आचार्य्यः सप्तयुद्धः स्याच्चतुर्भिर्भार्गवः स्मृतः
द्वाभ्यां चैव भवेद्योध एकेन गणको भवेत् १०

हस्तः पुनर्वसुः पुष्यो रोहिणी चोत्तरात्रयम्
अनुराधाश्विनी चैव रेवती दशमी तथा ११

जन्मस्थे च तृतीये च षष्टे वै सप्तमे तथा
दशमैकादशे चन्द्रे सर्वकार्य्याणि कारयेत् १२

तृतीया पञ्चमी चैव सप्तमी दशमी तथा
त्रयोदशी द्वादशी च तिथयस्तु शुभामताः १३

रविवारः शुक्रवारो गुरुवारस्तथैव च
एतद्वारं त्रयं धन्यं प्रारम्भे शस्त्रकर्म्मणाम् १४

एभिर्द्दिनैस्तु शिष्याय गुरुः शास्त्राणि दापयेत्
सन्तर्प्यदानहोमाभ्यां सुरान् स्वाहा विधानतः १५

ब्राह्मणान् भोजयेत् तत्र कुमारींश्चाप्यनेकशः
तापसानर्च्चयेद्भक्त्या ये चान्ये शिवयोगिनः १६

अन्नपानादिभिश्चैव वस्त्रालङ्कारभूषणैः
गन्धमाल्यैर्विचित्रैश्च गुरुं तत्र प्रपूजयेत् १७

कृतोपवासः शिष्यस्तु धृताजिन परिग्रहः
बद्धाञ्जलिपुटस्तत्र याचयेद् गुरुतो धनुः १८

अङ्गन्यासं ततः कार्य्यं शिवोक्तं सिद्धिमिच्छता
आचार्य्येण च शिष्यस्य पापघ्नं विघ्ननाशनम् १९

शिखास्थानेन्यसेदीशं बाहुयुग्मे च केशवम्
ब्रह्माणं नाभिमध्ये तु जङ्घयोश्च गणाधिपम् २०

ॐ ह्रीं शिखा स्थाने शङ्कराय नमः
ॐ ह्रीं बाह्वोः केशवाय नमः
ॐ ह्रीं नाभिमध्ये ब्रह्मणे नमः
ॐ ह्रीं जङ्घयोर्गणपतये नमः २१

ईदृशं कारयेद् न्यासं येन श्रेयो भविष्यति
अन्येऽपि दुष्टमन्त्रेण न हिंसन्ति कदाचन २२

शिष्याय मानुषं चापं धनुर्मन्त्राभिमन्त्रितम्
काण्डात् काण्डाति मन्त्रेण दद्याद्वेदविधानतः २३

अथ वेधविधिः

प्रथमं पुष्पवेधं च फलहीनेन पत्रिणा
ततः फलयुतेनैव मत्स्यवेधं च कारयेत् २४

एतैर्वेधैः कृतैः पुंसां शराः स्युः सर्वसाधकाः २५

वेधने चैव मांसस्य शरपातो यदा भवेत्
पूर्व दिग्भागमाश्रित्य तदास्याद्विजयी सुखी २६

दक्षिणे कलहो घोरो विदेशगमनं पुनः
पश्चिमे धनधान्यञ्च सर्वञ्चैवोत्तरे शुभम् २७

ऐशान्यां पवनं दुष्टं विदिशोऽन्यांश्च शोभनाः
हर्षपुष्टिकराश्चैव सिद्धिदाः सर्वकर्म्मणि २८

एवं वेधत्रयङ्कुर्याच्छङ्खं दुन्दुभिनिस्वनैः
ततः प्रणम्य गुरवे धनुर्बाणान्निवेदयेत् २९

अथ चापप्रमाणम्

प्रथमं यौगिकं चापं युद्धचापं द्वितीयकम्
निजबाहुबलोन्मानात् किञ्चिदूनं शुभं धनुः ३०

वरं प्राणाधिको धन्वी न तु प्राणाधिकं धनुः
धनुषा पीड्यमानस्तु धन्वी लक्ष्यं न पश्यति ३१

अतो निजबलोन्मानं चापं स्याच्छुभकारकम्
देवानामुत्तमं चापं ततो न्यूनं च मानवम् ३२

अर्द्धपञ्चमहस्तन्तु श्रेष्ठं चापं प्रकीर्त्तितम्
तद्विज्ञेयं धनुर्दिव्यं शङ्करेण धृतं पुरा ३३

चतुर्विंशाङ्गुलो हस्तश्चतुर्हस्तं धनुः स्मृतम्
तद्भवेनमानवं चापं सर्वलक्षणसंयुतम् ३४

अथ शुभचापलक्षणम्

त्रिपर्वं पञ्चपर्वं वा सप्तपर्वं तथा पुनः
नव पर्वञ्च कोदण्डं सर्वदा शुभकारकम् ३५

चतुष्पर्वञ्च षट्पर्वं अष्टपर्वं विवर्ज्जयेत् ३६

केषाञ्चिच्च भवेच्चापं वितस्तिनवसम्मितम् ३७

अथ वर्ज्जितधनुः

अतिजीर्णमपक्वञ्च ज्ञातिधृष्टन्तथैव च
दग्धं छिद्रं न कर्त्तव्यं बाह्याभ्यन्तरहस्तकम् ३८

गुणहीनं गुणाक्रान्तं काण्डदोषसमन्वितम्
गलग्रन्थि न कर्त्तव्यं तलमध्ये तथैव च ३९

अपक्वं भङ्गमायाति ह्यति जीर्णन्तु कर्कशम्
ज्ञातिधृष्टं तु सोद्वेगं कलहो बान्धवैः सह ४०

दग्धेन दह्यते वेश्म छिद्रं युद्धविनाशकम्
बाह्ये लक्ष्यं न लभ्येत तथैवाभ्यन्तरेऽपि च ४१

हीने तु सन्धिते बाणे संग्रामे भङ्गकारकम्
आक्रान्ते तु पुनः क्वापि लक्ष्यं न प्राप्यते दृढम् ४२

गलग्रान्थितलग्रन्थिधनहानिकरं धनुः
एभिर्दोषैर्विनिर्मुक्तं सर्वकार्य्यकरं स्मृतम् ४३

शार्ङ्गं पुनर्धनुर्दिव्यं विष्णोः परमायुधम्
वितस्ति सप्तमं मानं निर्म्मितं विश्वकर्म्मणा ४४

न स्वर्गे न च पाताले न भूमौ कस्यचित् करे
तद्धनुर्वशमायाति मुक्तैकं पुरुषोत्तमम् ४५

पौरुषेयं तु यच्छार्ङ्गं बहुवत्सरशोभितम्
वितस्तिभिर्सार्द्धषड्भिनिर्म्मितं चार्थसाधनम् ४६

प्रायो योज्यं धनुः शार्ङ्गं गजारोहाश्वसादिनाम्
रथीनां च पदातीनां वांशं चापं प्रकीर्त्तितम् ४७

विश्वामित्र शृणुष्वाथ धनुर्द्रव्यत्रयं क्रमात्
लोहं शृङ्गञ्च काष्ठञ्च गदितं शम्भुना पुरा ४८

लोहानि स्वर्णरजतताम्रकृष्णायसानि
शृङ्गाणि महिषशरभरोहितानाम्

शरभोऽष्टपाद् चतरुर्द्धपादो महाविषाण
उष्ट्रमितो वनस्थः काश्मीरदेशप्रसिद्धो मृगाख्यः

दारूणि चन्दनवेत्रसाधावनशालशाल्मलि
साककककुभवंशाञ्जनानाम् ४९

अथ गुण लक्षणानि

गुणानां लक्षणं वक्ष्ये यादृशं कारयेद्गुणम्
पट्टसूत्रो गुणः कार्य्यः कनिष्ठामानसम्मितः ५०

धनुः प्रमाणो निःसन्धिः शुद्धैस्त्रिगुणतन्तुभिः
वर्त्तितः स्याद्गुणः श्लक्ष्णः सर्वकर्म्मसहो युधि ५१

अभावे पट्टसूत्रस्य हरिणीस्नायुरिष्यते
गुणार्थमपि च ग्राह्या स्नायवो महिषी भवाः ५२

तत्कालहतछागस्य तन्तुना वा गुणाः शुभाः
निर्लोमतन्तुसूत्रेण कुर्य्याद्वा गुणमुत्तमम् ५३

पक्ववंशत्वचः कार्य्यो गुणस्तु स्थावरो दृढ
पट्टसूत्रेण सन्नद्धः सर्वकर्म्मसहो युधि ५४

प्राप्ते भाद्रपदेमासि त्वगर्कस्य प्रशस्यते
तस्यास्तत्र गुणः कार्य्यो न वित्तः स्थावरो दृढः ५५

गुणाः कार्य्या समुञ्जानां भङ्गस्नायवर्कवर्म्मिणाम्

अथ शरलक्षणानि

अतः पहं प्रवक्ष्यामि शराणां लक्षणं शुभम्
स्थूलं नाति सूक्ष्मञ्च नोऽपक्वं न कुभूमिजम् ५६

हीनग्रन्थिविदीर्णं च वर्जयेदीदृशं शरम्
पूर्णग्रन्थि सुपक्वं च पाण्डुरं समयाहृतम् ५७

शरवंशा गृहीतव्या शरत्काले च गाधिज ५८

कठिनं वर्त्तुलं काण्डं गृह्णीयात् सुप्रदेशजम्
द्वौ हस्तौ मुष्टिहीनौ च दैर्घ्ये स्थूले कनिष्ठिका
विधेयाः शरमानेषु यन्त्रेष्वाकर्षयेत् ततः ५९

काकहंसशशादानां मत्स्यादक्रौञ्चकेकिनाम्
गृध्राणां कुरराणाञ्च पक्षा एते सुशोभनाः ६०

षडङ्गुलप्रमाणेन पक्षच्छेदञ्च कारयेत्
दशाङ्गुलमिता पक्षा शार्ङ्गचापस्य मार्गणे ६१

योज्या दृढाश्चतुः संख्याः सन्नद्धाः स्नायुतन्तुभिः
शराश्च त्रिविधा ज्ञेयाः स्त्रीपुंसाश्च नपुंसकः
व्यग्रस्थूलो भवेन्नारी पश्चात् स्थूलो भवेत् पुमान् ६२

समो नपुंसको ज्ञेय तल्लक्ष्यार्थे प्रशस्यते
दूर पातो युवत्या च पुरुषो भेदयेद् दृढम् ६३

अथ फललक्षणम्

आरामुखं क्षुरप्रञ्च गोपुच्छं चार्द्धचन्द्रकम्
सूचीमुखञ्च भल्लञ्च वत्सदन्तं द्विभल्लकम् ६४

कर्णिकं काकतुण्डं च तथान्यान्यप्यनेकशः
फलानि देशभेदेन भवन्ति बहुरूपतः ६५

अथैतेषां कर्म्माणि

आरा मुखेन चर्म्मछेदनम् क्षुरप्रेण बाणकर्त्तनम्
वा बाहुकर्त्तनम् गोपुच्छेन लक्ष्यसाधनम्
अर्द्धचन्द्रेण ग्रीवा मस्तकधनुरादीनां छेदनम्
सूचीमुखेन कवच भेदनम् भल्लेन हृदय-
भेदनम् वत्सदन्तेन गुणचर्व्वणम्
द्विभल्लेन बाणावरोधनम्
कर्णिकेन लोहमयबाणानां छेदनम् काकतुण्डेन
वेध्यानां वेधं कुर्य्यात् ६६

अन्यद्गोपुच्छकं ज्ञेयं शुद्धकाष्ठविनिर्म्मितम्
मुखे च लोहकण्टेन विद्धं त्र्यङ्गुलसम्मितम् ६७

बाणस्य फलस्थाने कण्टकयोजनात् गोपुच्छबाणो भवति
अनेन शराभ्यासस्तथा लक्ष्याभ्यासो वा कर्त्तव्यः ६८

अथ पायनम् शरोपरि औषधलेपनम्

इषु फले शरवंशामूललेपनाद्
भवति तच्चिह्नमतेत् । यस्मिन् शरवंशसमहे ।
स्वाति बिन्दुर्निपतति स पीतवर्णो भवति तस्य
मूले विषमुत्पद्यते तन्मूलं ग्राह्यं । स च सर्वदा
पवनाभावेऽपि कम्पते इदमेव तल्लक्ष्मेति ६९

फलस्य पावनं वक्ष्ये दिव्यौषधिविलेपनैः
येन दुर्भेद्यवर्म्माणि भेदयेत्तरुपर्णवत् ७०

पिप्पली सैन्धवं कुष्टं गोमूत्रेतु सुपेषयेत्
अनेन लेपयेच्छस्त्रं लिप्तं चाग्नौ प्रतापयेत् ७१

शिखिग्रीवानुवर्णाभं तप्तपीतं तथौषधम्
ततस्तु विमलं तोयं पाययेच्छस्त्रमुत्तमम्  ७२

अथ नाराचनालीकशतघ्नीनां वर्णनम्
सर्व लोहास्तु ये बाणा नाराचास्ते प्रकीर्त्तिताः
पञ्चभिः पृथुलैः पत्रैर्युक्ताः सिद्ध्यन्ति कस्यचित्  ७३

नालीका लघवो बाणा नलयन्त्रेण नोदिताः
अत्युच्चदूरपातेषु दुर्गयुद्धेषु ते मताः  ७४

सिंहासनस्य रक्षार्थं शतघ्नं स्थापयेत् गढे
रंजकंबहुलं तत्र स्थाप्यं वटयो धीमता  ७५

अथ स्थानमुष्ट्याकर्षणलक्षणानि
स्थान्यष्टौ विधेयानि योजने भिन्नकर्म्मणाम्
मुष्टयः पञ्चसमाख्याता व्यायाः पञ्च प्रकीर्त्तिताः  ७६

अग्रतो वामपादश्च दक्षिणं चानुकुञ्चितम्
प्रत्यालीढं प्रकर्त्तव्यं हस्तद्वयसविस्तरम्  ७७

आलीढे तु प्रकर्त्तव्यं सव्यं चैवानुकुञ्चितम्
दक्षिणन्तु पुरस्ताद्वा दूरपाते विशिष्यते  ७८

पादौ सविस्तरौ कार्य्यौ समौ हस्तप्रमाणतः
विशाखस्थानकं ज्ञेयं कूटलक्ष्यस्य वेधने  ७९

समपादैः समौ पादौ निष्कम्पौ च सुसङ्गतौ
असमे च पुरो वामे हस्तमात्रनतं वपुः  ८०

आकुञ्चितोरुद्वौ यत्र जानुभ्यां धरणीं गतौ
दर्दुरक्रममित्याहुः स्थानकं दृढभेदने  ८१

सव्यं जानुगतौ भूमौ दक्षिणं च सकुञ्चितम्
अग्रतो यत्र दातव्यं तद्विद्याद्गरुडक्रमम् ८२

पद्मासनं प्रसिद्धन्तु ह्युपविश्य यथाक्रमम्
धन्विनां तत्तुविज्ञेयं स्थानकं शुभलक्षणम् ८३

अथ गुणमुष्टिः

पताका वज्रमुष्टिश्च सिंहकर्णस्तथैव च
मत्सरी काकतुण्डी च योजनीया यथाक्रमम् ८४

दीर्घा तु तर्ज्जनी यत्र ह्याश्रिताङ्गुष्ठमूलकम्
पताका सा च विज्ञेया नालिका दूरमोक्षणैः ८५

तर्ज्जनी मध्यमा मध्यं अङ्गुष्ठो विशते यदि
वज्रमुष्टिस्तु सा ज्ञेया स्थूले नाराचमोक्षणैः ८६

अङ्गुष्ठमध्यदेशन्तु तर्जन्यग्रं शुभं स्थितम्
सिंहकर्णः स विज्ञेयो दृढलक्ष्यस्य वेधने ८७

अङ्गुष्ठनखमूले तु तर्ज्जन्यग्रञ्च संस्थितम्
मत्सरी सा च विज्ञेया चित्रलक्ष्यस्य वेधने ८८

अङ्गुष्ठाग्रे तु तर्जन्यां मुखं यत्र निवेशितम्
काकतुण्डी च सा ज्ञेया सूक्ष्मलक्ष्येषु योजिता ८९

अथ धनुर्मुष्टिसन्धानम्

सन्धानं त्रिविधं प्रोक्तमधमूर्द्ध्वं समं सदा
योजयेत् त्रिप्रकारं हि कार्य्येष्वपि यथाक्रमम् ९०

अधश्च दूरपातित्वे समे लक्ष्येषु निश्चले
दृढस्फोटं प्रकुर्वीत ऊर्ध्वसन्धानयोगतः ९१

अथ धनुर्व्यायाः

कैशिकः केशमूले वै शरः शृङ्गे च सात्त्विकः
श्रवणे वत्सकर्णश्च ग्रीवायां भरतो भवेत्  ९२

अंसके स्कन्धनामा च व्यायाः पञ्चप्रकीर्त्तिताः
कैशिकश्चित्रयुद्धेषु ह्यधो लक्ष्येषु सात्त्विकः  ९३

वत्सकर्णः सदाज्ञेयो भरतो दृढ भेदने
दृढभेदे च दूरे च स्कन्धनामानमुद्दिशेत्  ९४

अथ लक्ष्यम्

लक्ष्यं चतुर्विधं ज्ञेयं स्थिरं चैव चलन्तथा
चलाचलं द्वयचलं वेधनीयं क्रमेण तु  ९५

आत्मानं सुस्थिरं कृत्वा लक्ष्यञ्चैव स्थिरं बुधः
वेधयेत् प्रिप्रकारन्तु स्थिरवेधी स उच्यते  ९६

चलन्तु वेधयेद् यस्तु आत्मस्थानेषु संस्थितः
चलं लक्ष्यं तु तत् प्रोक्तमाचार्येण शिवेन वै  ९७

धन्वीतः चलते यत्र स्थिरलक्ष्ये समाहितः
चलाचलं भवेत्तत्र ह्यप्रमेयमाचिन्ततम्
उभावपि चलौ यत्र लक्ष्यं चापि धनुर्द्धरः
तद्विज्ञेयं द्वयचलं श्रमेण बहु साध्यते  ९८

श्रमेणास्खलितादृष्टिः शीघ्रसन्धानमाप्यते  ९९

श्रमेण चित्रयोधित्वं श्रमेण प्राप्यते जयः
तस्माद् गुरुसमक्षं हि श्रमः कार्य्यो विजानता  १००

## अथ लक्ष्याभ्यासस्वरूपाणि

प्रथमं वामहस्तेन यः श्रमं कुरुते नरः
तस्य चापक्रियासिद्धिरचिरादेव जायते १

वामहस्ते सुसंसिद्धे पश्चाद्दक्षिणमारभेत्
उभाभ्याञ्च श्रमं कुर्य्यान्नाराचैश्च शरैस्तथा २

वामेनैव श्रमं कुर्य्यात् सुसिद्धिर्दक्षिने करे
विशाखेनासमेनैव रथी व्याये च कैशिके ३

उदिते भास्करे लक्ष्यं पश्चिमायां निवेशयेत्
अपराह्णे च कर्त्तव्यं लक्ष्यं पूर्व्वदिगाश्रितम् ४

उत्तरेण सदा कार्य्यमवश्यमवरोधिकम्
संग्रामेण विना कार्य्यं न लक्ष्यं दक्षिणामुखम् ५

षष्टिधन्वन्तरे लक्ष्यं ज्येष्ठं लक्ष्यं प्रकीर्त्तितम्
चत्वारिंशत्मध्यमञ्च विंशतिश्च कनिष्ठकम् ६

चत्वारिंशच्च त्रिंशच्च षोडशैव भवेत्ततः ७

चतुः शतैर्श्च काण्डानां यो हि लक्ष्यं विसर्ज्जयेत्
सूर्य्योदये चास्तमने स ज्येष्ठो धन्विनां भवेत् ८

त्रिंशतैर्मध्यमश्चैव द्विशताभ्यां कनिष्ठकः
लक्ष्यं च पुरुषोन्मानं कुर्य्याच्चन्द्रकसंयुतम् ९

ऊर्द्ध्वभेदी भवेज्जयेष्ठो नाभिभेदी च मध्यमः
पादभेदी तु लक्ष्यस्य स कनिष्ठो मतो भृगो १०

अथानध्यायः

अष्टमी च ह्यमावास्या वर्जनीया चतुर्द्दशी
पूर्णिमार्द्धदिनं यावन्निसिद्धं सर्वकर्म्मसु ११

अकाले गर्ज्जिते दैवे दुर्द्दिनं चाथवा भवेत्
पूर्वकाण्डहतं लक्ष्यमनध्याये प्रचक्षते १२

अनुराधर्क्षमारभ्य षोडशर्क्षे दिवाकरः
यावच्चरति तं कालमकालं हि प्रचक्षते १३

अरुणोदयः वेलायां वारिदो यदि गर्जति
तद्दिने स्यादनध्यायस्तमकालं प्रचक्षते १४

श्रमं च कुर्वतस्तत्र भुजङ्गो दृश्यते यदि
अथवा भज्यते चापं यदैव श्रमकर्म्मणि १५

त्रुटयते वा गुणो यत्र प्रथमे बाणमोक्षणे
श्रमं तत्र न कुर्वीत शस्त्रे मतिमतां वरः १६

अथ श्रमक्रिया

क्रियाकलापान् वक्ष्यामि श्रमसाध्यांश्छुचिष्मताम्
येषां विज्ञानमात्रेण सिद्धिर्भवति नान्यथा १७

प्रथमं चापमारोप्य चूलिकां बन्धयेत्ततः
स्थानकं तु ततः कृत्वा बाणोपरि करं न्यसेत् १८

तोलनं धनुषश्चैव कर्त्तव्यं वामपाणिना
आदानञ्च ततः कृत्वा सन्धानञ्च ततः परम् १९

सकृदाकृष्टचापेन भूमिवेधं न कारयेत्
नमस्कुर्य्याच्च मां विघ्नराजं गुरुं धनुः शरान् २०

याचितव्या गुरोराज्ञा बाणस्याकर्षणं प्रति
प्राणवायुं प्रयत्नेन प्राणेन सह पूरयेत्  २१

कुम्भकेन स्थिरं कृत्वा हुङ्कारेण विसर्जयेत्
इत्यभ्यास क्रिया कार्य्या धन्विता सिद्धिमिच्छता  २२

षण्मासात् सिध्यते मुष्टिः शराः सम्वत्सरेण तु
नाराचास्तस्य सिध्यन्ति यस्य तुष्टो महेश्वरः  २३

पुष्पवद्धारयेद्बाणं सर्पवत् पीडयेद्धनुः
धनवच्चिन्तयेल्लक्ष्यं यदीच्छेत् सिद्धिमात्मनः  २४

क्रियामिच्छन्ति चाचार्य्या दूरमिच्छन्ति भार्गवाः
राजानो दृढमिच्छन्ति लक्ष्यमिच्छन्ति चेतरे  २५

जनानां रञ्जनं येन लक्ष्यपातात् प्रजायते
हीनेनापीषुणा तस्मात्प्रशस्तं लक्ष्यवेधनम्  २६

अथ लक्ष्यस्खलनविधिः

विशाखस्थानकं हित्वा समसन्धानमाचरेत्
गोपुच्छमुख बाणेन सिंहकर्णेन मुष्टिना  २७

आकर्षेत् केशिकव्याये न शिखाश्चालयेत्ततः
पूर्वापरौ समं कार्य्यौ समांसौ निश्चलौ करौ  २८

चक्षुषी स्पन्दयेन्नैव दृष्टिं लक्ष्ये नियोजयेत्
मुष्टिनाच्छादितं लक्ष्यं शरस्याग्रे नियोजयेत्  २९

मनो दृष्टिगतं कृत्वा ततः काण्डं विसर्ज्जयेत्
स्खलत्येव कदाचिन्न लक्ष्ये योद्धा जितश्रमः  ३०

अथ शीघ्र सन्धानम्

आदानं चैव तूणीरात् सन्धानं कर्षणं तथा
क्षेपणं च त्वरा युक्तो बाणस्य कुरुते तुयः ३१

नित्याभ्यास वशात्तस्य शीघ्रसन्धानता भवेत्

अथ दूरपातित्वं

मठ्या पताकया बाणं स्त्री चिह्नं दूरपातनम्

दृढभेदनम्

प्रत्यालीढे कृते स्थाने ह्यधः सन्धानमाचरेत्
दर्दूरस्थानमास्थाय ह्यूर्द्धधारणमाचरेत् ३२

स्कन्ध व्यायेन वज्रस्य मुष्ट्यापुमार्गणेन च
अत्यन्त सौष्ठवं वाह्वोर्जायते दृढभेदिता ३३

हीनगतिसमूहः

सूचीमुखा मीनपुच्छा भ्रमरी च तृतीयका
शराणां गतयस्त्रिस्त्रः प्रशस्ता कथिता बुधैः ३४

सूचीमुखा गतिस्तस्य सायकस्य प्रजायते
पत्रं विलोकितं यस्य ह्यथवा हीनपत्रकम् ३५

कर्कशस्तन्तु चापेन यः कृष्टो हीनमुष्टिना
मत्स्यपुच्छा गतिस्तस्य सायकस्य प्रकीर्त्तिता ३६

भ्रमरी कथिता ह्येषा शिवेन श्रमकर्म्मणि
ऋजुत्वेन विना याति क्षिप्यमाणस्तु सायकः ३७

बाणलक्ष्यस्खलनगतिसमूहः

वामगा दक्षिणा चैव ऊर्द्ध्वगाधोगमा तथा

चतस्त्रो गतयः प्रोक्ता बाणस्खलनहेतवः २८

पूर्वोक्त गतिसमूहोदाहरणम्

कम्पते गुणमुष्टिस्तु मार्गणस्य तु पृष्ठतः
सन्मुखोस्याद्धनुर्मुष्टिस्तदा वामे गतिर्भवेत् ३९

ग्रहणं शिथिलं यस्य ऋजुत्वेन विवर्जितम्
पार्श्वन्तु दक्षिणं याति सायकस्य न संशयः ४०

ऊर्द्धं भवेच्चापमुष्टिर्गुणमुष्टिरधो भवेत्
समुक्तो मार्गणो लक्ष्यादूर्द्धं याति न संशयः ४१

मोक्षणे चैव बाणस्य चापमुष्टिरधो भवेत्
गुणमुष्टिर्भवेदूर्द्धं तदाधोगामिनी गतिः ४२

अथ शुद्धगतयः

लक्ष्यबाणाग्रदृष्टिनां सङ्गतिस्तु यदा भवेत्
तदानीं मुञ्चितो बाणो लक्ष्यान्न स्खलति ध्रुवम् ४३

निर्दोषः शब्दहीनश्च सममुष्टिद्वयोऽङ्कितः
भिनक्ति दृढभेद्यानि सायको नास्ति संशयः ४४

स्वाकृष्टस्तेजितोयश्च सुशुद्धो गाढमुष्टितः
नरनागाश्व कायेषु न तिष्ठति स मार्गणः ४५

यस्य तृणसमा बाणाः यस्येन्धनसमं धनुः
यस्य प्राणसमा मौर्वी स धन्वी धन्विनां वरः ४६

अथ दृढचतुष्कम्

अयश्चर्म्मघटश्चैव मृतपिण्डश्च चतुष्टयम्
यो भिनत्ति न तस्येषुर्वज्रेणापि विदीर्यते ४७

सार्द्धाङ्गुलप्रमाणेन लोहपत्राणि कारयेत्
तानि भित्त्वैकबाणेन दृढघाती भवेन्नरः ४८

चतुर्विंशति चर्म्माणि यो भिनत्तीषुणा नरः
तस्य बाणो गजेन्द्रस्य कायं निर्भिद्य गच्छति ४९

भ्राम्यन् जले घटो वेध्यश्चक्रे मृत्पिण्डकं तथा
भ्रमन्ति वेधयेद्यो हि दृढ भेदी स उच्यते ५०

अयस्तु काकतुण्डेन चर्म्मचारामुखेन हि
मृतपिण्डं च घटं चैव विध्येत् सूचीमुखेन वै ५१

बाणभङ्गकरावर्त्तः काष्ठच्छेदनमेव च
बिन्दुकं गोलकयुग्मं यो वेत्ति स जयी भवेत् ५२

लक्ष्य स्थाने धृतं कान्तं सम्मुखं छेदयेत्ततः
किञ्चिद् मुष्टिं विधाय स्वां तिर्य्यग् द्विफलकेषुणा ५३

सम्मुखं बाणमायान्तं तिर्य्यग् बाणं न सञ्चरेत्
प्राज्ञः शरेण यश्छिन्द्याद्बाणच्छेदी स उच्यते ५४

अथ काष्ठछेदनम्

काष्ठेऽश्वकेशं संयम्य तत्र बध्वा वराटिकाम्
हस्तेन भ्राम्यमाणं च यो हन्ति सो धनुर्धरः ५५

लक्ष्य स्थानेन्यसेत् काष्ठं सार्द्रं गोपुच्छसन्निभम्
यश्छिन्द्यात्तत् क्षुरप्रेण काष्ठच्छेदी स जायते ५६

लक्ष्ये बिन्दुं न्यसेच्छुभ्रं शुभ्रबन्धूकपुष्पवत्
हन्ति तं बिन्दुकं यस्तु चित्रयोधा स उच्यते ५७

काष्ठगोलयुगं क्षिप्रं दूरमूर्द्ध्वं पुरा स्थितैः
असम्प्राप्तं शरं पृष्ठे तद्गोपुच्छमुखेन हि ५८

यो हन्ति शरयुग्मेन शीघ्रसन्धान योगतः
स स्याद्धनुर्भृतां श्रेष्ठः पूजितः सर्वपार्थिवैः ५९

अथ धावल्लक्ष्यम्

रथस्थेन गजस्थेन हयस्थेन च पत्तिना
धावता वै श्रमः कार्य्यो लक्ष्यं हन्तुं सुनिश्चितम् ६०

अथ विधिः

वामादायाति यल्लक्ष्यं दक्षिणं हि प्रधावति
तच्छिन्द्याच्चापमाकृष्य सव्येनैव च पाणिना ६१

तथैव दक्षिणायान्तं विध्येद्बाणाद्धनुर्धरः
आलीढक्रममारोप्य त्वरा हन्याच्च तं नरः ६२

वायोरपि बलं दृष्ट्वा वामदक्षिणवाहतः
लक्ष्यं संसाधयेदेवं गाधिपुत्र नृपात्मज ६३

वायुः पृष्ठे दक्षिणे च वहन् सूचयते बलम्
सन्मुखीनश्च वामश्च भटानां भङ्गसूचकः ६४

अथ शब्दवेधित्वम्

लक्ष्यस्थाने न्यसेत् कांस्यपात्रं हस्तद्वयान्तरे
ताडयेच्छर्कराभिस्तच्छब्दः सञ्जायते यदा ६५

यत्र चैवोद्यते शब्दस्तं सम्यक् तत्र चिन्तयेत्
कर्णेन्द्रियमनोयोगाल्लक्ष्यं निश्चयतां नयेत् ६६

पुनः शर्करया तच्च ताडयेच्छब्दहेतवे

पुनर्निश्चयतां नेयं शब्दस्थानानुसारतः ६७

ततः किञ्चित् कृतं दूरं नित्यं नित्यं विधानतः
लक्ष्यं समभ्यसेद् ध्वान्ते शब्दवेधनहेतवे ६८

ततो बाणेन हन्यात्तदवधानेन तीक्ष्णधीः
एतच्च दुष्करं कर्म्म भाग्ये कस्यापि सिद्ध्यति ६९

अथ प्रत्यागमनम्

खगं बाणन्तु राजेन्द्र प्रक्षिपेद्वायुसन्मुखे
रञ्जकस्य च नालाभिरतोह्यागमनं भवेत् ७०

एवं श्रमविधिं कुर्य्याद्यावद् सिद्धिः प्रजायते
श्रमे सिद्धे च वर्षासु नैव ग्राह्यं धनुष्करे ७१

पूर्वाभ्यासस्य शास्त्राणामविस्मरणहेतवे
मासद्वयं श्रमं कुर्य्यात् प्रतिवर्षं शरदृतौ ७२

जाते वाश्व युजिमासे नवमी देवतादिने
पूजयेदीश्वरीं चण्डीं गुरुं शास्त्राणि वाजिनः ७३

विप्रेभ्यो दक्षिणां दत्वा कुमारीभोजयेत्ततः
देव्यै पशुबलिं दद्याद् भृतोवादित्रमङ्गलैः ७४

ततस्तु साधयेन्मन्त्रान् वेदोक्तान् आगमोदितान्
अस्त्राणां कर्म्मसिद्ध्यर्थं जपहोम विधानतः ७५

ब्राह्मं नारायणं शैवमैन्द्रं वायव्यवारुणे
आग्नेयं चापरास्त्राणि गुरुदत्तानि साधयेत् ७६

मनोवाक्कर्म्मभिर्भाव्यं लब्धास्त्रेण शुचिष्मता

अपात्रमसमर्थञ्च दहन्त्यस्त्राणि पूरुषम्  ७७

प्रयोगं चोपसंहारं यो वेत्ति स धनुर्द्धरः
सामान्ये कर्म्मणि प्राज्ञो नैवास्त्राणि प्रयोजयेत्  ७८

अथास्त्राणि

अथास्त्राणि प्रवक्ष्यामि सावधानोऽवधारय
ब्रह्मास्त्रं प्रथमं प्रोक्तं द्वितीयं ब्रह्मदण्डकम्  ७९

ब्रह्मशिरस्तृतीयञ्च तुर्य्यं पाशुपतं मतम्
वायव्यं पञ्चमं प्रोक्तमाग्नेयं षष्ठकं स्मृतम्  ८०

नरसिंहं सप्तमञ्च तेषां भेदाह्यनन्तकाः
ससंहारं सविज्ञेयं शृणु गाधे यथातथम्  ८१

वेदमात्रा सर्वशास्त्रं गृह्यते दोप्यतेऽथवा
तत्प्रयोगं शृणु प्राज्ञ ब्रह्मास्त्रं प्रथमं शृणु  ८२

दादिदान्ताञ्च सावित्रीं विपरीतां जपेत् सुधीः
जप्त्वा पूर्वां निखर्वञ्च त्वभिमन्त्रय विधिवच्छरम्
क्षिपेच्छत्रुषु सहसा नश्यन्ति सर्वजातयः
बाला वृद्धाश्च गर्भस्था ये च योद्धुं समागताः  ८३

सर्वे ते नाशभायन्ति मम चैव प्रसादतः
यथातथं दादिदान्तं जपेत् संहारसिद्धये  ८४

ब्रह्मदण्डं प्रवक्ष्यामि प्रणवं पूर्वमुच्चरेत्
ततः प्रचोदयाज्ज्ञेयं ततो नो यो धियः क्रमात्
ततो धीमहि देवस्य ततो भर्गो वरेण्यम्
सवितुस्तच्च योक्तव्यममुकशत्रुं तथैव च  ८५

ततो हन हन हुं फट् जप्त्वा पूर्वं द्विलक्षयकम्
अभिमन्त्र्य शरं तद्वत् प्रक्षिपेच्छत्रुषु स्फुटम्  ८६

नश्यन्ति शत्रवः सर्वे यमतुल्या अपि ध्रुवम्
एतदेव विपर्य्यस्तं जपेत् संहारसिद्धये  ८७

ब्रह्मशिरः प्रवक्ष्यामि प्रणवं पूर्वमुच्चरेत्
धियो यो नः प्रचोदयात् भर्गो देवस्य धीमहि
तत्सवितुर्वरेण्यम् शत्रून्मे हन हनेति च  ८८

हूं फट् चैवप्रयोक्तव्यं क्षिपेद् ब्रह्मशिरस्ततः
पुरश्चर्य्यां पुरस्कृत्वा त्रिलक्ष्यं नियतः शुचिः  ८९

नश्यन्ति सर्वे रिपवः सर्वे देवासुरा अपि
इदमेव प्रयोक्तव्यः विपर्य्यस्तं विकर्षणे  ९०

पाशुपतास्त्रम्

अतः परं प्रवक्ष्यामि चास्त्रं पाशुपतन्तव
यस्य विज्ञानमात्रेण नश्यन्ति सर्वशत्रवः  ९१

दादिदान्तां च सावित्रीं प्रोच्य प्रणवमेव च
श्लीं पशुं हुं फट् अमुकशत्रून् हन हन हुं फट्  ९२

जप्त्वा पूर्व्वं द्विलक्षञ्च ततः पाशुपतं क्षिपेत्
पुनस्तदेव व्यस्तं स्यात् संहारे तां नियोजयेत्
एतत् पाशुपतं चास्त्रं सर्वशत्रुनिवारणम्  ९३

वच्मि वायव्यमस्त्रं ते येन नश्यन्ति शत्रवः
ओं वायव्यया या वायव्ययान्योर्वाय या वा तथा
अमुकशत्रूम् हन हन हूं फट् चैव प्रकीर्त्तयेत्
पूर्व्वमेव तथा जप्त्वा नियुतं द्वितयन्तथा  ९४

पुनः संहाररूपेण संहारं च प्रकल्पयेत्
अस्त्रं वायव्यकं नाम देवानामपि वारणम् ९५

आग्नेयं संप्रवक्ष्यामि यतः परभयं दहेत्
ओमग्निस्त्यता हृदञ्च शिवं वनाश्चाविणि च
हगादशरूपनः सद वे ति ततः क्रमात्
हादति तोयति राम तथा मसो हित्वा वान् ९६

सुसेदवेदया च वदेत् अमुकादीं स्ततो वदेत्
पूर्वोक्तांश्च पुरश्चर्य्यां कृत्वा शस्त्रेभियोजयेत्
इमं मन्त्रं पुनर्व्यस्तं संहारे चैव योजयेत् ९७

ॐ वज्रनखवज्रदंष्ट्रायुधाय महासिंहाय हुं फट्
पूर्वं जप्त्वा च लक्षं हि नरसिंहञ्च योजयेत्
सिंहरूपास्ततो बाणा पतन्ति शात्रवे वने ९८

पूर्वोक्तेन प्रकारेण संहारञ्च प्रकल्पयेत्
संक्षेपतो महाभाग तवोक्तानि महामते
भेदास्तेषां शिवेनैव ह्यनन्ताः परिकीर्त्तिताः ९९
इत्यस्त्रप्रकरणम्

अथौषधिः

हस्तार्के लाङ्गली कन्दो गृहीतस्तस्य लेपतः
शूरस्यापि रणे पुंसो दर्पं हरति कातरः १

गृहीत्वा योगनक्षत्रैरपामार्गस्य मूलकम्
लेपमात्रेण वीराणां सर्वशस्त्रनिवारणम् २

अधः पुष्पी शङ्खपुष्पी लज्जालुर्गिरिकर्णिका
नलिनी सहदेवी च पत्रमोञ्जार्कयोस्तथा ३

विष्णुकान्ता च सर्वासां जटा ग्राह्या रवेर्दिने
बद्धा भुजे विलेपाद्वा काये शस्त्रापवारकाः ४

सर्पव्याघ्रादिसत्त्वानां भूतादीनां न जायते
भीतिस्तस्य स्थिता यस्य मातरोऽष्टौ शरीरके ५

गृहीतं हस्तनक्षत्रे चूर्णं छुच्छुन्दरी भवम्
तत्प्रभावाद्गजः पुंसः सम्मुखं नैति निश्चितम् ६

हरिमांसं गृहीत्वा च मार्गेऽश्वानां क्षिपेद्भुवि
तेन मार्गेण ते चाश्वा नायान्ति ताडनेन वै ७

छुच्छुन्दरीश्रीफलपुष्पचूर्णैरालिप्तगात्रस्य नरस्य दूरात्
आघ्राय गन्धं द्विरदोऽतिमत्तोमदं त्यजेत् केसरिणो यथोग्रम् ८

श्वेताद्रिकर्णिका मूलं पाणिस्थं वारयेद्गजम्
श्वेतकण्टारिकामूलं व्याघ्रादीनां भयं हरेत् ९

पुष्यार्कोत्पाटिते मूले पाठायाः मुखसंस्थिते
देहं स्फुरति नो तीक्ष्णमण्डलाग्रै रणे नृणाम् १०

गान्धार्य्या उत्तरं मूलं मुखस्थं सन्मुखागतम्
शस्त्रौधं वारयेत्तत्र पुष्यार्के विधिनोद्धृतम् ११

अथ विधिरूपवासः

शुभ्रायाः परपुङ्खाया जटनीली जटाथवा
भुजे शिरसि वक्त्रे वा स्थिता शस्त्रनिवारिका
भूपाहिचोरभीतिघ्नी गृहीता पुष्यभास्करे १२

अथ संग्रामविधिः

आदौ तु क्रियते मुद्रा पश्चाद्युद्धं समाचरेत्

सर्पमुद्रा कृता येन तस्य सिद्धिर्न संशयः १३

श्री रुद्रं ध्यात्वा तन्मन्त्रं जपेत्
ओं नमः परमात्मने सर्वशक्तिमते विरूपाक्षाय भालनेत्राय
रं हुं फट् स्वाहा ।
ततो हैमवतीं ध्यात्वा प्रणम्य युद्धमारभेत् । ओं ह्रीं
श्रीं हैमवतीश्वरीं ह्रीं स्वाहा । ओं ह्रीं वज्रयोगिन्यै स्वाहा ।
सिंहासनस्थां रुद्राणीं ध्यायेत् १४

अपूर्ण शत्रुसामग्री पूर्णे वै स्वबलन्तथा
कुरुते पूर्णसत्वस्थो जयत्येको वसुन्धराम् १५

पृष्ठे दक्षे योगिनी राहुयुक्ता
यस्यैकोऽयं शत्रुलक्षं निहन्ति
अर्कः पृष्ठे दक्षिणे यस्य गाधे
चन्द्रे वामे सन्मुखे वै निशायाम्
वायु पृष्ठे दक्षिणे यो विदध्यात्
योधा शत्रून्नाशयेद्दक्षिणेन १६

या नाडी वहते चाङ्गे तस्यामेवाधिदेवता
सन्मुखेऽपि दिशा तेषां सर्वकार्य्यफलप्रदा १७

यां दिशं वहते वायुर्युद्धं तद्दिशि दापयेत्
जयत्येव न सन्देहः शक्रोऽपि यदि चाग्रतः १८

सूर्य्ये पूर्वे चोत्तरे च चन्द्रे पश्चिमदक्षिणं
सेनापतिबलं त्वेवं प्रेषयेन्नित्यमादरात् १९

यत्र नाड्या वहेद् वायुस्तदङ्गे प्राणमेव च
आकृष्य गच्छेत् कर्णान्तं जयत्येव पुरन्दरम् २०

प्रतिपक्षप्रहारेभ्यः पूर्णाङ्गं योऽभिरक्षति
न तस्य रिपुभिः शक्तिर्बलिष्ठैरपि हन्यते २१

अङ्गुष्ठतर्जनीवंशे पादाङ्गुष्ठे तथा ध्वनिः
युद्धकाले च कर्त्तव्यो लक्षयोधाजयी भवेत् २२

भूतत्त्वे ह्युदरं रक्षेत् पादौ रक्षेज्जलेन च
उरूश्च वह्नितलेन करौ रक्षेच्चवायुना २३

सूर्य्ये पूर्वे चोत्तरे च मुखं कृत्वा जयेन्नरः
चन्द्र मुखं सदा कुर्य्याद्दक्षिणे पश्चिमे सुधीः २४

चिरयुद्धे शुभश्चन्द्रः शीघ्रयुद्धे रविस्तथा
दूर युद्धे जयी चन्द्रः समीपस्थे दिवाकरः २५

आकृष्य प्राणपवनं समारोहेच्च वाहनम्
समुत्तरेत् पदं दद्यात् सर्वकार्य्याणि साधयेत् २६

न कालो विविधं घोरं न शस्त्रं न च पन्नगाः
न शत्रुव्याधिचौराद्याः शून्यस्थान्नाशितुं क्षमाः २७

अयनतिथिदिनेशैः स्वीयतत्त्वेऽध्व युक्तो
यदि वहति कदाचिद्दैवयोगेन पुंसाम
स जयति रिपुसैन्यं स्तम्भमात्रस्वरेण
प्रभवति न च विघ्नं केशवस्यापि लोके २८

जीवेन शस्त्रं वघ्नीनाज्जीवेनैव विकासयेत्
जीवेन प्रक्षिपेच्छस्त्रं युद्धे जयति सर्वदा २९

वामनाड्युपदये चन्द्रः कर्त्तव्यो वामसन्मुखः
सूर्य्यचारे तथा सूर्य्यः पृष्ठे दक्षिणगो जयेत् ३०

दीप्ते कार्य्ये नाडी परिदिशि जीविता सदा कुर्य्यात्
शान्ते च जीवसहितात्वेवं सिद्ध्यन्ति कार्य्याणि ३१

तत्त्वबलान्नाडीवलमधिकं प्रोक्तं कपर्दिना नियतम्
ज्ञात्वैनं स्वर चारं नरो भवेत् कार्य्यनिपुणमतिः ३२

न देयमिति क्रुराय कुबुद्धयेऽशान्ताय
गुरुद्रोहिणेऽभक्तायेति । देयमिति ब्रह्मचारिणे
धर्म्मतः प्रजापालदुष्टदण्डविधारिणे साधुसंरक्ष
काय इत्येवं प्रवचनं प्रवचनमिति ३३

अथ राहुयुक्ता योगिनीबलयुद्धं व्याख्यास्यामः
प्रतिपन्नवम्यां प्रथमेऽर्द्धयामे राहु-
युक्ता योगिनी पूर्वस्यां दिशि स्थिता भवति १

द्वितीया दशम्यां पञ्चमेऽर्द्धयामे राहु-
सहिता शिवा प्रतीच्यामुदेति २

तृतीयैकादश्यां तृतीयेऽर्द्धयामे तमः
संमिलिता पार्वती याम्यां परिभ्रमति ३

चतुर्थ्यां द्वादश्यां तु सप्तमेऽर्द्धयामे राहुना
सह नगजा चोत्तरे ज्ञेया ४

पञ्चम्यामथ त्रयोदश्यामष्टमेऽर्द्धयामे
स्वर्भानुयुता गौरी नैर्ऋत्यामटति ५

गुहतिथौ चतुर्द्दश्यां च कात्यायनी
पवनालये चायाति ६

सप्तमीपूर्णिमायां चतुर्थेऽर्द्ध प्रहरे विधुन्तुदेन

साकं योगिनीं ऐशान्यां जानीयात् ७

अष्टम्यमायां षष्ठेऽर्द्धयामे रुद्राणी
तमोयुक्ता साग्नेय्यामीक्ष्यते ८

द्वितीयेऽर्द्धयामे सैंहिकेययुता
इति राहुयुक्ता योगिनी उपग्राह्या ९

ततो व्यूहादिभिर्युद्धकथनम्
ये राजपुत्राः सामन्ता आप्ताः सेवकजातयः
तान् सर्वानात्मनः पार्श्वे रक्षायै स्थापयेन्नृपः ३५

परस्परानुरक्ता ये योधा शर्ङ्गधनुर्धराः
युद्धज्ञास्तुरगारूढास्ते जयन्ति रणे रिपुन् ३६

एकः कापुरुषो दीर्णो दारयेन्महतीञ्चनुम्
तद्दीर्णानु दीर्य्यन्ते योधाः शूरतमा अपि ३७

अतो वै कातरं राजा बलेनैव नियोजयेत्
द्वाविमौ पुरुषो लोके सूर्य्यमण्डलभेदिनौ ३८

परिव्राडयोगयुक्तश्च रणे चाभिमुखो हतः
यत्र यत्र हतः शूरः शत्रुभिः परिवेष्टितः ३९

अक्षयं लभते लोकं यदि क्लीबं न भाषते ४०

मूर्छितं नैव विकलं नाशस्त्रं नान्ययोधिनम्
पलायमानं शरणं गतञ्चैव न हिंसयेत् ४१

भीरुः पलायमानोऽपि नान्वेष्टव्यो बलीयसा
कदाचिच्छूरतां याति शरणेऽकृतनिश्चयः

संभृत्य महतीं सेनां चतुरङ्गां महीपतिः ४२

व्यूहयित्वाग्रतः शूरान् स्थापयेज्जयलिप्सया
पृष्ठेन वायवो वान्ति पृष्ठे भानुवयांसि च
अनुप्लवते मेघाश्च यस्य तस्य रणे जयः
अपूर्णेनैव मर्त्तव्यं सम्पूर्णेनैव जीवनम् ४४

तस्माद्धैर्य्यं विधायैव हन्तव्या परवाहिनी
जिते लक्ष्मीर्मृते स्वर्गः कीर्त्तिश्च धरणीतले ४५

तस्माद्धैर्य्यं विधायैव हन्तव्या परवाहिनी
अधर्म्मः क्षत्रियस्यैषः यद् व्याधिं मरणं गृहे
यदाजौ निधनं याति सोऽस्य धर्म्मः सनातनः ४६

अथ व्यूहानाह

युवास्वरे मध्यसेना युद्धं कुर्य्यादतन्द्रिता
द्वेसेने पार्श्वयोश्चैका पृष्ठतो रक्षयेत् सदा
एकां विकटसेनान्तु दूरस्थां भ्रामयेद् युधि ४७

दण्डव्यूहश्च शकटो वराहो मकरस्तथा
सूचीव्यूहोऽथ गरुडः पद्मव्यूहादयो मताः ४८

एतान् व्यूहान् परिव्यूह्य सेनापतिर्वसेत् सदा
बला ध्यक्षादिकान् सर्वान् सर्वदिक्षु नियोजयेत्

ततो दण्डव्यूहः

सर्वतो भये दण्डव्यूहर् रचनाकार्य्या ४९

पृष्ठतो भये शकटव्यूहम्

पश्चाद्देशे भये समुत्पन्ने शकटाकारेण व्यूहं रचयेत्
पार्श्वभये वराहव्यूहो गरुडव्यूहो वा विधेयः

दक्षिणवामपार्श्वयोर्भये उपस्थिते
वराहव्यूहो गरुडव्यूहो वा कार्य्यः

अग्रतोभये पिपीलिकाव्यूहम्
सन्मुखे शत्रुभये जाते पिपीलिका पंक्तिरूपः

व्यूहविन्यासः कार्य्यः
स्वल्पा युद्धं कुर्य्यात् बह्वी सेना च सर्वतो
भ्रमेत् सम भूमौ चाश्ववारा युद्धं कुर्य्युः
जले करि तुम्बी दृतिं नौकाभिर्युद्धं विधेयम्
पदातयो भुशुण्डीं गृहीत्वा वा धनूं षिचादाय
वने वृक्षेष्वन्यर्धाना वारुढा भूत्वा युद्धयत
स्थले चर्म्मखङ्गभल्लैर्युद्धयत युद्धाहङ्कारिण-
स्तुङ्गा अग्रे स्थाप्याः अन्ये पश्चात् ५१

अथ सेनानयः
तत्रादौ व्याकरणशिक्षां वक्ष्यामो राज्ञे
नृपतिर्लौट् लकारस्य कुर्य्यात् कण्ठस्थितानि च
रूपाणि कार्य्यं सिद्धयर्थं ह्याज्ञैषा मम गाधिज
मध्यमपुरुषस्यैव प्रयोगान्यो विचिन्तयेत् ५२

सेनानीः प्रतिदिनं सम्यङ्ग न केनापि स हन्यते
मध्यममपुरुषोद्भूताः प्रयोगाः सर्वसिद्धिदाः
तैरेव साधयेद्राज्ञां पुरुषा राजभृत्यकाः ५३

पदातिक्रमः
समोच्चा द्विपदा ग्राह्या ह्रसमानाः कदाचन
कूर्द्दने धावने ये वै समास्ते कार्य्यसाधकाः ५४

पश्चाद् गमनं स्थिरीकरणं श्यनं धावनं तथा
चलनं परसेनायां पार्श्वदिक्षु च कारयेत् ५५

षष्ठ स्थाने ग्रहा येषां क्रूराः पापाः पतन्ति हि
ते युद्धे युद्धयतां वीरा नान्ये कार्य्यकरा यतः
व भ ध ड छ क वर्णा ह्यादिमायां प्रकल्प्य
तदनु हि अच वर्णा आदिकाः सर्व्वलेख्याः
उपरिगतभवस्तान् स्थाप्य सर्वान् क्रमेण
भवति च युवयस्या युद्धयतां सा प्रसेना ५६

उदाहरणम्

यथा विवस्वान् भरतः धन्धुमारः डित्थः
छत्रपतिः कुक्षिः अस्या वस्त्राणि पीतानि ध्वजापीता च तद्वति
युद्धयूपस्तथा पितश्चतुरस्त्राङ्कसंयुतः ५७

श्वेतरक्तहरिकृष्णाश्चान्या सेना हित्वादिवत्
कर्त्तव्यापार्थिवैर्नित्यं जयलाभसुखेच्छुभिः ५८

ब्रह्मा विष्णुश्च रुद्रश्च चन्द्रसूर्यौ यथाक्रमम्
अधीशाः पञ्चसेनानां विज्ञेयाः शृणु गाधिज ५९

ब्रह्मा रुद्रबले जीयाद्विष्णुश्चन्द्रबले जयेत्
रुद्रः सूर्य्यबलं प्राप्य चन्द्रो ब्रह्मबलं युधि
सूर्य्यो विष्णुबलं लब्ध्वा जयेच्चैव नसंशयः ६०

अ ब्रह्मा विष्णुरिरुद्र उश्चन्द्रत्वे च भास्करः
ओ ज्ञेयो पार्थिवैर्नित्यं अस्त्रशस्त्रविचक्षणैः ६१

प्राप्य स्वं स्वं बलं सेना पूर्बोक्ता युद्धगा यदि
क्षणार्द्धेनारीन् सर्वाणमारयन्तीति रुद्रवाक् ६२

अथाश्वक्रमः

मण्डलं चतुरस्त्रञ्च गोमूत्रञ्चार्द्धचन्द्रकम्
नागपाशक्रमेणैव भ्रामयेत् कटपञ्चकम् ६३

अथ हस्तिक्रमः

गजानां पर्वतारोहणम् जलगमनम् धावनम् उत्थानम्
उपवेशनम् अलातचक्रादिभिर्भीतिनि वारणम् कार्य्यम्

रथक्रमः

रथाश्वसाधनन्तु समादिस्थले विधेयम्
अथ सेनापति करणविधिं वक्ष्यामः
शृणु भो राजर्षे विश्वामित्र आकारविद्याबल-
युक्तं क्षत्रियसेनापतिं विद्ध्यात् । तस्यैते
नियमाः समस्तवाहिनीं एकदृष्ट्यावलोकयेत् ।
अन्यत् सर्व्वान् पदातीन् परिश्रमसदृशमधिकारं
दद्यात् । व्यूहरचनायामति निपुणश्च
भवेत् स एव सेनानीर्विधेयः । इति

अथ शिक्षा

तत्रादौ षठनपाठनविधिं ब्रूमा । आदौ
क्षात्रकोशव्याकरण सूत्राण्यध्येतव्यानि द्वावध्यायौ
सप्तमाष्टमौमनोर्मिताक्षराव्यवहाराध्यायश्च जयार्णव
विष्णुयामलविजयाख्यस्वरशास्त्राण्यपराणि च
पटितव्यानि ततः सरहस्यं धनुर्व्वेदमापठेत्

हन्तव्याहन्तव्योपदेशः

सुप्तं प्रसुप्तमुन्मन्तं ह्यकच्छं शस्त्रवर्जितम्
बालं स्त्रियं दीनवाक्यं धावन्तं नैवघ्रातयेत् ६४

धम्मार्थं यः त्यजेत् प्राणान् किं तीर्थे च जपे च किम्
मुक्तिभागी भवेत् सोऽपि निरयं नाधिगच्छति ६५

ब्राह्मणार्थे गवार्थे वा स्त्रीणां बालवधेषु च
प्राणत्यागपरो यस्तु सवै मोक्षमवाप्नुयात् ६६

